इति । दक्षोऽपि—

पदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥

अत्र कूर्मपुराणं—

इत्येतदखिलं प्रोक्तमहन्यहनि वै द्विजाः ।
ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् ॥
नास्तिक्यादथवाऽऽलस्याद्ब्राह्मणो न करोति यः ।
स याति नरकान्घोरान्काकयोनौ च जायते ॥
नान्यो विमुक्तये पन्था मुक्त्वाऽऽश्रमविधिं स्वकम् ।
तस्मात्कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ॥

इति । इति स्मृतिचन्द्रिकायां शयनविधिः.

आह्निकं व्यदधाद्देवः केशवार्य सुतस्सुधीः ।
सर्वैर्वाचनिकैरर्थैरच्युतः प्रीयतामिति ॥

इति श्री सकल विद्याविशारद श्री केशवादित्य
भट्टोपाध्यायासुत याज्ञिक देवणभट्टोपाध्याय
विरचितायां स्मृतिचन्द्रिकायां
आह्निककाण्डः समाप्तः.

